卐 श्रीसीतारामो विजयतेतराम् 卐

श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषिता

# केनोपनिषत्

## 卐 मङ्गलाचरणं 卐

ॐ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च । सर्वाणि सर्वं ब्रह्मोपनिषदं माह ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ।

ॐ शान्तिः शान्तिः शान्तिः

बदरीफलमपि दत्त्वा शबरी लेभे गतिं यतः परमाम् ।
तमहं देवं वन्देऽनुपधिदयासागरं रामम् ॥१॥

आराध्यं ब्रह्मरुद्रादेर्जगद्धेतुं च मुक्तिदम् ।
दिव्यदेहं गुणाम्भोधिं रामं ब्रह्म समाश्रये ॥२॥

सूत्रवृत्तिकृतौ नत्त्वा व्यासबोधायनौ मुनी ।
श्रीमन्तं राघवानन्दाचार्यगुरुं नमाम्यहम् ॥३॥

कुर्वे गुरुं नमस्कृत्य ज्ञानभक्तिदयानिधिम् ।
केनोपनिषदश्चात्र भाष्यमानन्दसंज्ञकम् ॥४॥

卐 सर्वेश्वरश्रीसीतारामाभ्यां 卐

आनन्दभाष्यसिंहासनासीन

## जगद्गुरुश्रीरामानन्दाचार्यश्रीरामेश्वरानन्दाचार्य

प्रणीत प्रकाश

**सीतारामसमारम्भां शुकबोधायनान्विताम् ।**
**रामानन्दार्यमध्यस्थां वन्दे गुरुपरम्पराम् ॥**

जिस कृपालु भगवान् श्रीरामजी को शबरी ने बैर के फल को अनन्यभाव से समर्पण करके योगियों से भी दुष्प्राप्य परमगति को प्राप्त कर लिया । एतादृश निरूपाधिक दया के सागर देवाधिदेव सर्वेश्वर श्रीरामजी को मैं नमस्कार करता हूँ ॥१॥ ब्रह्मा तथा रुद्रादिक देवोंसे आराधित सूक्ष्म स्थूल चराचर जगत् का अभिन्न निमित्तोपादान कारण तथा मुक्ति देनेवाले लोकोत्तर दिव्य विग्रह वाले अनन्त कल्याण गुणों के समुद्र भगवान् श्रीरामरूप ब्रह्म का आश्रय लेता हूँ, (अर्थात् नमस्कार करता हूँ) ॥२॥ सूत्र कार श्रीव्यासमुनि तथा वृत्तिकार श्रीबोधायनजी को नमस्कार करके श्रीमान् राघवानन्दाचार्यजी गुरुदेव को मैं नमस्कार करता हूँ ॥३॥ ज्ञान भक्ति और दया के सागर गुरु महाराज जगद्गुरु श्रीराघवानन्दाचार्यजी को वन्दन दण्डवत प्रणाम करके केनोपनिषत् का आनन्द संज्ञक भाष्य बनाता हूँ ॥४॥

सर्वस्यैव जनस्य मनः प्रभृतीनि करणानि अनीप्सितेऽपि वस्तुनि प्रवर्तमानानि ईप्सितेऽपि चाप्रवर्तमानानि भवन्ति सा चैषा प्रवृत्तिः प्रवर्तकपुरुषमन्तरेण न संभवति कुठारादिषु तथा दर्शनात् । अतः प्रवर्तकचेतनविशेषप्रश्नमुखेन ब्रह्मप्रश्नमुपक्षिपति कश्चिद् ब्रह्मजिज्ञासुः शिष्यः-

**ॐ केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥१॥**

卐 श्रीरामाय नमः 卐

आनन्दभाष्यकार जगद्गुरुश्रीरामानन्दाचार्याय नमः

आनन्दभाष्यसिंहासनासीन

**जगद्गुरुश्रीरामानन्दाचार्यश्रीरामेश्वरानन्दाचार्य**

प्रणीता लघुदीपिका

सीतारामसमारम्भां शुकबोधायनान्विताम् ।
रामानन्दार्यमध्यस्थां वन्दे गुरुपरम्पराम् ॥

किससे प्रेरित होकर अच्छे या बूरे विषयों के प्रति मन लग जाता है ? एवं किससे प्रेरित होकर पंच प्राणों में मुख्य प्राण अपने कार्य में संलग्न होता है तथा किससे क्रिया युक्त होकर वेद वाणी या अन्य वाणी को जनसाधारण वोलते हैं । हे आचार्यजी ? निश्चय रूपसे कौन देव चक्षु तथा श्रोत्र को उन उन के कार्यों में लगाता है ? ॥१॥

मनः केन किंसंज्ञकेन प्रवर्तकविशेषेण प्रेषितं प्रेरितं सत् इषितम् इष्टम् । अत्र इडागमः छान्दसः । विषयं प्रति पतति गच्छति । इषितमित्यनिष्टस्याप्युपलक्षणम्, अनिष्टेऽपि विषये मनसः प्रवृत्तिदर्शनात् । अचेतनत्वात् स्वयमस्य प्रवृत्तिर्न सम्भवति । जीव एव प्रेरक इत्यपि न युक्तम् अनिष्टेपि प्रवृत्तिदर्शनात् तस्मात् जीवकृतनिग्रहमवहेलयतोऽस्य कश्चिदपर एव प्रवलः प्रेरको भवेत् सः क इति प्रश्नाशयः । प्रथमः प्राणः पञ्चसु प्राणेषु मुख्यः हृदयस्थानः प्राणः केन देवेन युक्तः प्रवर्तितः सन् प्रैति प्रगच्छति स्वकार्यं प्रति, शरीरधारणरूपं स्वव्यापारं करोतीत्यर्थः 'यथाऽहमेवैतत् पञ्चधात्मानं विभज्यैतद् बाणमवष्टभ्य धारयामि' (प्र. २।३) इतिश्रुत्या शरीरधारणरूपजीवनमेव मुख्यप्राणस्य प्रधानोव्यापारः इत्यवगमात् । केन देवेन इषितां प्रवर्तिताम् इमां श्रूयमाणां लौकिकीं वैदिकीञ्च वाचं शब्दस्वरूपां वदन्ति जीवा इत्यध्याहार्यम् । यद्वा जीवाः प्रेरिता इति पदद्वयमध्याहार्य केन प्रेरिता जीवाः इषिताम् इष्टाम् उपलक्षणाम् अनिष्टाञ्च वाचं वदन्ति इति व्याख्येयम् । एतेन जीवस्यापि तत्पारवश्यमुक्तं भवति । उ शब्दः सम्बोधनार्थः । अतः भो आचार्य ! कः किमभिधानः देवः द्योतमानः पुरुषविशेषः । चक्षुः

**श्रोत्रम् चक्षुश्च श्रोत्रं च क्षुंश्रोत्रम् प्राण्यङ्गत्वादेकवद् भावः । युनक्ति दर्शनश्रवणात्मके व्यापारे योजयति । चक्षुः श्रोत्रमिति घ्राणादीनामितरकरणानामप्युपलक्षणम् । अतः सर्वेषां करणानां जीवस्य च प्रेरयिता यः पुरुषविशेषो देवः तं वदेतिभावः ॥१॥**

सब व्यक्तियों का मन प्रभृतिक जो करण हैं वे ज्ञान का साधन हैं । वह अनभिलषित वस्तुओं में भी प्रवर्तमान होता है । तथा क्वचित् ईप्सित अभिलषित वस्तुओं में भी प्रवर्तमान नहीं होता है । वह यह लोगों की प्रवृत्ति निवृत्ति प्रवर्तक पुरुष के बिना असम्भवित है क्योंकि छिदारूप कार्य का करण जो कुठारादिक उसमें ऐसा देखने में आता है । अतः कोई जिज्ञासु शिष्य प्रवर्तक पुरुष के प्रश्न द्वारा ब्रह्म श्रीरामविषयक प्रश्न का उत्थान करता है-'**केनेषितम्**' इति । यह संकल्प विकल्प वृत्तिवाला मन अन्तःकरण किससे किस प्रवर्तक विशेष से प्रेषित प्रेरित होता हुआ मन इष्ट अभिलषित-ईषित में जो इट् का आगम है वह छान्दस होने से है । विषय स्वाभिमत वस्तु के प्रति पतित होता है अर्थात् जाता है । ईषित यह उपलक्षण है, अनभिलषित पदार्थ का भी क्योंकि इष्ट के समान अनिष्ट वस्तु के प्रति भी मन की प्रवृत्ति देखने में आती है । अचेतन होने से

स्वयं तो मन की प्रवृति हो नहीं सकती है। जीव मन का प्रेरक होगा यह भी नहीं कह सकते हैं क्योंकि इष्ट के समान अनिष्ट में भी प्रवृत्ति होती है। स्वतन्त्र जीव को अनिष्ट में प्रवृत्त नहीं होना चाहिये। अतः जीव के निग्रह का अवहेलन करते हुए इस मन का अवश्य कोई प्रबल प्रवर्तक होना चाहिये। वह प्रबल प्रवर्तक कौन है यह प्रश्न का आशय है। **'प्रथमः प्राणः'** इति। पञ्च संख्यक प्राणों में से मुख्य हृदयस्थान स्थित जो मुख्य प्राण वह किस देव से युक्त प्रवर्तित हो करके स्वकीय कार्य के प्रति जाता है अर्थात् शरीरधारण लक्षणरूप स्वव्यापार को करता है। 'मैं ही अपने स्वरूप को पाँच प्रकार से विभक्त करके इस बाण को अर्थात् इस शरीर को पकड करके धारण करता हूँ' इस श्रुति से शरीरधारणरूप जीवन ही मुख्य प्राण का प्रधान व्यापार है ऐसा जाना जाता है, **'केनेति'** किस देव से ईषित प्रवर्तित हो करके इस श्रूयमाण लौकिक और वैदिक शब्दरूप वाणी को जीव बोलता है। यहां जीव का अध्याहार करना चाहिये। अथवा **'जीवाः प्रेरितारः'** इन दो पदों का अध्याहार करना चाहिये। किससे प्रेरित हो करके जीव इष्ट तथा अनिष्ट वाणी बोलता है ऐसी व्याख्या करनी चाहिये। इससे जीव को भी परपुरुष

पराधीनत्व बतलाया गया । 'क उ' में जो उ शब्द है वह सम्बोधनार्थक है । अतः हे आचार्य ? कौन नाम वाला देव द्योतमान पुरुष विशेष; चक्षु श्रोत्र को । यहां प्राणी के अङ्ग होने के कारण एकवद्भाव हुआ है । योजित करता है अर्थात् चक्षु श्रोत्र को अपने अपने व्यापार में प्रेरित करता है वह देव कौन है । चक्षु श्रोत्र घ्राणादिक इन्द्रियों का भी उपलक्षण है । इसलिये सब करणों का तथा जीव का प्रेरयिता कौन देव है उसे आप हमें कहिये यह फलितार्थ हुआ ॥१॥

एवं पृष्ट आचार्यः प्रतिवदति-

**श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥२॥**

सर्व नियन्ता जो परमेश्वर श्रीरामजी हैं वे ही मन का मन प्राण का प्राण एवं वाणी के भी वाणी हैं और श्रोत्र का श्रोत्र हैं तथा निश्चित रूपसे चक्षु के चक्षु भी वे ही हैं वे ही सर्वेश्वर श्रीरामचन्द्रजी इन सभी इन्द्रियादि के प्रेरक हैं अतः सभी को प्रेरणा प्रदाता श्रीरामजी के स्वरूप को जानने वाले धीर-विवेकी पुरुष ही इस भौतिक शरीर से छूटकर अर्चिरादि मार्ग से श्रीसाकेतधाम प्राप्तकर अमृत-सायुज्यमुक्ति प्राप्त कर जन्म तथा मृत्यु से रहित हो जाता है ॥२॥

**यत् श्रोत्रस्य श्रोत्रम्, मनसो मनः वाचो वाचम् प्राणस्य प्राणः चक्षुषः चक्षुः ह त्वया पृष्टः प्रवर्तको**

देवः स उ इत्यन्वयः । यत् यः श्रोत्रस्य श्रोतुः जीवस्य शब्दसाक्षात्कारे उपकारकमिन्द्रियं श्रोत्रं तस्य श्रोत्रम् शब्दभासकत्वशक्तिदाता परमपुरुषाहितशक्तिकोऽस्यैव श्रोत्रेन्द्रियस्य शब्दभासने समर्थत्वात् अतः सः श्रोत्रस्य श्रोत्रमित्युच्यते । मनसः सुखदुःखाद्यान्तरवस्तूपलम्भे साधनभूतमिन्द्रियं मनः तस्यापि मनः मननोपयोगि शक्तिदाता नहि परमात्मना अनाहितशक्तिकं मनः जीवस्य सुखादिसाक्षात्कारे साधनभावं भजेत् । अतः मनसो मन इत्युच्यते परमपुरुषः । वाचो वाचम् जीवस्य शब्दयोगात्मकव्यापारे साधनमिन्द्रियं वाक् तस्य वागिन्द्रियस्य वाक् छान्दसप्रथमार्थे द्वितीया । शब्दोच्चारणशक्तिप्रदः, परमपुरुषप्राप्तशक्तिमदेव वागिन्द्रियं जीवस्य शब्दप्रयोगे साधनं भवति । अतः वाचो वाक् इत्युक्तः । प्राणस्य प्राणः शरीरधारणरूपव्यापारवान् शरीरान्तःसञ्चारी वायुः प्राणः तस्य प्राणः जीवन शक्तिप्रदः, परमपुरुषाहितजीवनशक्तिक एव जीवनं करोति तस्मात् प्राणस्य प्राण इति कथ्यते । चक्षुषः चक्षुः रूपादिसाक्षात्कारे जीवस्य उपकारकमिन्द्रियं चक्षुः तस्यापि चक्षुषः परमात्मा दर्शनप्रदत्वात् परमात्मलब्धशक्तिकस्यैव चक्षुः रूपादिसाक्षात्कारे साधनत्वात् । अतः श्रोत्रादीनां तत्तच्छक्तिप्रदो यो देवः

प्रसिद्धः स एव मनआदीनां प्रेरयितृत्वेन त्वया पृष्टो देव इति बुध्यस्व । 'यो मनोऽन्तरोयमयति' 'वाचमन्तरोयमयति' 'श्रोत्रमन्तरोयमयति' 'चक्षुरन्तरोयमयति' 'प्राणमन्तरोयमयति' इत्याद्याभिः श्रुतिभिरपि परमपुरुषस्य सर्वेश्वरस्य मनः प्रभृतिनियामकत्वं सिध्यति । श्रोत्रादीनां प्रवर्तकः सर्वेश्वर एवेत्येवं भूतस्य ज्ञानस्य फलं प्रदर्शयति आचार्यः अतिमुच्य धीरा इति, धीराः परमपुरुष एव मनः प्रभृतिप्रवर्तकः इति ज्ञानवन्तो जना अस्मात् दृश्यमानात् लोकात् देहात् प्रेत्य निष्क्रम्य मूर्धन्यया शताधिकया नाड्या निर्गत्य अर्चिरादिमार्गेण गत्वा अतिमुच्य लिङ्गशरीरं परित्यज्य अमृताः मुक्ताः भवन्ति । यद्वा अतिमुच्य परमात्मनः सर्वान्तर्यामित्व ज्ञानेन स्वातन्त्र्यभ्रमं परित्यज्य परमेश्वर एव सर्वं कारयतीति चिन्तयन्तः अस्मात् लोकात् मृत्युलोकात् प्रेत्य अर्चिरादिपथा देशविशेषं भगवद्धामरूपं गत्वा अमृता भवन्ति, मुक्ताः भवन्तीत्यर्थः । एतेन मुक्तानां नान्यत्रलोके गमनं भवति, किन्तु ब्रह्मभाव एव भवतीति मतं व्युदस्तं भवति मुक्तिस्थानस्य भगवद्धामरूपलोकान्तरस्य प्रतीयमानत्वात् ॥२॥

इसप्रकार जब आचार्य को शिष्य ने प्रवर्तक के विषय में प्रश्न किया तब आचार्य कहते हैं-'श्रोत्रस्य

**श्रोत्रमित्यादि'** जो श्रोत्र का श्रोत्र है, मन का भी मन है, वाणी की वाणी है, चक्षु का चक्षु है तुमने जिस प्रवर्तक देव को पूछा है वह ऐसा है, इसप्रकार अन्वय करना चाहिये। जो श्रोत्र का श्रवण कर्ता जो जीव है उसे शब्द के साक्षात्कार करने में उपकारक जो श्रोत्रेन्द्रिय है उस श्रोत्र का भी वह देव श्रोत्र है। शब्द में जो भासकता शक्ति देनेवाला है क्योंकि परमपुरुष से प्राप्त है शक्ति जिसे एतादृश श्रोत्रेन्द्रिय ही शब्द को भासित करने में समर्थ होता है। इसलिये वह परमपुरुष श्रोत्र का भी श्रोत्र है ऐसा कहा जाता है। तथा जो मन का भी मन है, सुखदुःखादिक जो आन्तर पदार्थ हैं उनके उपलम्भ साक्षात्कार में साधनभूत इन्द्रिय मन है तादृश मन का भी वह परमपुरुष मन है। अर्थात् मनन की उपयोगी शक्ति देनेवाले परमात्मा ही हैं जिस मन को परमात्मा से शक्ति प्राप्त नहीं है एतादृश मन जीव के सुखदुःखादि के साक्षात्कार करने में साधनभाव को प्राप्त नहीं करता है। इसलिये वह परमपुरुष मन का भी मन है अर्थात् मनन शक्ति का दाता है-**'वाचोहवाचमिति'** जो वाणी की भी वाणी है। जीव के शब्द प्रयोगरूप व्यापार करने में साधनीभूत इन्द्रिय को कहते हैं वाक्। उस वागिन्द्रिय का भी वाक् है। वाचं में द्वितीया है वह प्रथमा के अर्थ

में है छान्दसत्वात् द्वितीया का प्रयोग किया गया हैं। वाणी का भी वाक् है अर्थात् शब्दोच्चारण शक्ति देनेवाला है परपुरुष से शक्ति को प्राप्त करके ही वागिन्द्रिय जीव के शब्द प्रयोग में साधन होता है। अतः परमपुरुष वाणी की भी वाणी कहे जाते हैं। **'प्राणस्य प्राण'** इति। प्राण का भी प्राण है। शरीर धारणरूप व्यापार वाला शरीर के अन्तः संचरणशील वायु को प्राण कहते हैं तादृश प्राण का भी प्राण है जीवन शक्ति देनेवाले हैं। परमपुरुष से प्रदत्त जीवन शक्ति वाला प्राण ही जीव को धारण करता है अतः परमपुरुष प्राण के भी प्राण कहे जाते हैं। **'चक्षुषश्चक्षुरिति'** चक्षु के भी चक्षु हैं। जीव के रूपादि साक्षात्कार करने में उपकारक इन्द्रिय चक्षु है, उस चक्षु को दर्शन शक्ति देनेवाले परमात्मा हैं, परमात्मा से लब्ध शक्तिक चक्षु को ही रूपरूपी द्रव्यादि साक्षात्कार करने में सामर्थ्य होने से वह चक्षुरादिक साधन होता है। अतः श्रोत्रादिक इन्द्रियादिक को तत्तद्वस्तु समुत्पादक शक्ति देनेवाले जो देव प्रसिद्ध हैं वेही देव मन आदि के प्रेरयिता हैं जिसके विषय में तुमने पूछा है ऐसा समझो।

'जो मन का नियन्त्रण करते हैं मन के अभ्यन्तर में

अवस्थित जिनका मन शरीर है जिनको मन नहीं जान सकता है' 'जो वाणी के अन्दर में रहकर जो वाणी को नियन्त्रित करते हैं' जो श्रोत्र के अन्दर में रहकर श्रोत्र का नियमन करते हैं' 'जो चक्षु के अन्दर में रहकर चक्षु को नियन्त्रित करते हैं' 'जो प्राण के अन्दर में रह करके प्राण को नियन्त्रित करते हैं' इत्यादि बृहदारण्यकीय श्रुतियों से भी मन आदि के नियामकत्व परमपुरुष सर्वेश्वर श्रीरामजी में ही सिद्ध होता है। श्रोत्रादि इन्द्रियों का प्रवर्तक परमपुरुष ही हैं एतादृश ज्ञान के फल को बतलाते हैं आचार्य-**'अतिमुच्यधीरा'** इत्यादि से। जो धीर है अर्थात् परमपुरुष ही मन आदि करणों का प्रवर्तक हैं इत्याकारक ज्ञानवान् जो अधिकारी लोग हैं वे दृश्यमान एतल्लोकस्थित देह से प्रेत्य निष्क्रमण करके अर्थात् मस्तक स्थित सुषुम्ना नाडी द्वारा निकल करके अर्चिरादिमार्ग से जा करके तथा लिङ्ग शरीर का परित्याग करके अमृत-मुक्त हो जाते हैं। अथवा परमात्मा सर्वान्तर्यामी हैं ऐसा जानने से जीव में स्वातन्त्र्य भ्रम को छोड करके परमेश्वर ही सब कराते हैं इसप्रकार से चिन्तन करते हुए इस मृत्युलोक से मर करके अर्चिरादिमार्ग द्वारा भगवद्धामरूप देश विशेष दिव्यधाम श्रीसाकेतलोक को प्राप्त करके अमृत हो जाते

हैं अर्थात् मुक्त हो जाते हैं। इससे मुक्त पुरुष को किसी अन्यत्र लोकान्तर में गमन नहीं होता है किन्तु ब्रह्मरूप ही हो जाते हैं एतादृश जो अन्य का मत है वह इससे खण्डित हो जाता है। क्योंकि भगवद्धामरूप लोकान्तर ही मोक्ष स्थान है ऐसा प्रतीयमान होता है। अतः श्रीसाकेत ही मोक्षस्थान है तदतिरिक्त और कोई नहीं ॥२॥

मनः प्रभृतीनां कः प्रेरक इति प्रश्नस्योत्तरं श्रोत्रस्य श्रोत्रमित्यादिना दत्तमपि न सन्तोषमावहति स्पष्टतया तत्स्वरूपस्यानुपदेशात्। अतः सुस्पष्टं तत्स्वरूपमुपदिशेति शिष्याकाङ्क्षायामाह-

**न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्याद्न्यदेव तद्विदितादथो अविदितादधि। इति शुश्रूम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥३॥**

उस सर्वेश्वर श्रीरामजी के ज्ञान हेतु वहां तक चक्षुः नहीं पहूँच सकती है एवं वाणी भी पूर्ण वर्णन नहीं कर सकती है तथैव मन भी पूर्ण रूपसे मनन नहीं कर सकता है तो वह परब्रह्म श्रीरामजी ऐसे ही हैं कैसे बताया जाय यह स्वयं हम नहीं जानते हैं या अन्यों से सुनकर भी यथार्थ रूपसे जान पाते हैं क्योंकि वह परमेश्वर श्रीरामजी अपने से जाने हुये तत्वों से एवं नहीं जाने हुये तत्त्वों से भी अधिक-विशिष्ट हैं या निश्चय रूपसे अलग ही तत्त्व है ऐसा हम पूर्ववर्ती तत्त्ववेत्ता आचार्यों से परम्परा से सुनते आये हैं उन्हीं आचार्य प्रवरों ने हमें उस

सर्वेश्वर परिपूर्ण ब्रह्म श्रीराम सम्बन्धी तत्त्व को अच्छीतरह से समझाया है ॥३॥

तत्र मनः प्राणादीनां प्रेरके परमपुरुषे चक्षुः न गच्छति न स्वव्यापारंकरोति, चक्षुःपदं प्रत्यक्षप्रमाण मात्रोपलक्षणम्, प्रत्यक्षप्रमाणं तत्र नोपतिष्ठत इत्यर्थः। अतीन्द्रियो हि सर्वेश्वरः, अतः प्रत्यक्षप्रमाणागोचर इति भावः। न वाग् गच्छति, वाक् पदेन वागिन्द्रियोच्चार्यशब्दप्रमाणं लक्ष्यते तादृशः शब्दोऽपि सर्वेश्वरं बोधयितुमसमर्थः प्रत्यक्षोपजीविनः शब्दप्रमाणस्य अतीन्द्रिये वस्तुनि प्रसरासम्भवात् इत्यर्थः। नो मनः अत्र मनः शब्देन मनोव्यापारप्रधानमनुमानं प्रमाणं लक्ष्यते तदनुमानमपि प्रत्यक्षमुपजीवति। अतः प्रत्यक्षातीते वस्तुनि अनुमानस्यापि नास्त्यवसरः। न मनः तत्र गच्छतीत्यन्वयः। नन्वेतावताऽपि सुस्पष्टमुपदिष्टो भवति सर्वेश्वर इत्यत्र आह न विद्मो न विजानीमो यथैतदनुशिष्यात् इदं दृश्यमानं वस्तु घटपटादिकं यथा येन प्रकारेण कम्बुग्रीवादिमत्त्वादिना अनुशिष्यात् उपदिश्येत् तादृशप्रकारं कमपि परमपुरुषे न विद्मः, घटादिवत् केनापिप्रकारेण सुस्पष्टोपदेशानर्ह एव परमात्माऽतो वस्तुस्वभाव एतादृशः नात्र उपदेशकस्य दोष इत्यवबुध्य सन्तोषमाधेहि। ननु विचित्रेऽत्र जगति

किमपि तादृशवस्तु भवेत् यत् उदाहृत्य विशेषतः उपदिशतु भवान् सर्वेश्वरस्वरूपमित्यत्राह न विजानीमः। लौकिकेषु वस्तुषु लौकिका एव प्रकाराः भवन्ति नहि तेषु एकोपि प्रकारः परमात्मनि येन प्रकारेण ते विशेषेण जानीयाम। अतः विशेषेण न जानीमो वयमिति कथं विशेषेण उपदिशाम। साकल्येन तस्योपदेशः साकल्येन बोधो न संभवति। अतः एतावतैव सन्तोष्टव्यमिति गुरोरभिप्रायः। ननु लौकिकार्थवत्स्पष्टमुपदेश्यत्वं नास्ति यदि तर्हि कीदृशं तत्स्वरूपमित्यत्राह अन्यदेव तद्विदितात् तत्परमात्मस्वरूपं विदितात् ज्ञान गोचरवस्तुनः अन्यदेव भिन्नमेव कात्स्न्येंन विदित वस्तुकोटौ नास्य अन्तर्भाव इति भावः। ननु एवमविदितत्वे खपुष्पादिवत्स्यात् परमपुरुष इत्यत्राह- अथोऽविदितादधि अविदितात् खपुष्पादितः अधि अन्यदेव परमात्मस्वरूपम्। कात्स्न्येंन अविदितोऽपि सर्वेश्वरः न खपुष्पादिवत् सर्वथा अविदितः उपनिषत् प्रमाणवेद्यत्वात् खपुष्पादिकं केनापि प्रमाणेन न वेद्यते इति भेद इतिभावः। इति एवं प्रकारवचनं शूश्रूम श्रुतवन्तो वयम्। कुतः इत्याकांक्षयामाह पूर्वेषाम् पूर्वेभ्यः आचार्येभ्यः इत्यर्थः। इह पञ्चम्यर्थे षष्ठी। केभ्यः पूर्वेभ्य इत्यत्राह। ये पूर्वाचार्याः नः अस्माकं

कृते तत् परमपुरुषस्वरूपं व्याचचक्षिरे विविच्य उपदिष्टवन्तः तेभ्यः श्रुतवन्तो वयमित्यर्थः। पूर्वकालीना :आचार्याः सम्यक् भगवत्स्वरूपमालोच्य अस्मान्प्रति ईदृशमेव वचनमुक्तवन्तः, यत् परमात्मस्वरूपं साकल्येन उपदेशयोग्यं साकल्येन ज्ञानयोग्यं वा नास्त्येव। अतः विदितेभ्यः अविदितेभ्यश्च भिन्नं वेदशिरस्समुदायसमुपपादितमेव वेद्यं भवतीतिभावः। यद्वा अविदितशब्देन अचिदंशः उच्यते, विदितशब्देन तु चिदंशः ताभ्यां चिदचिद्भ्यामन्यः एव सर्वेश्वर तदन्तर्यामीति व्याख्येयम् ॥३॥

शिष्य ने प्रश्न किया कि हे गुरो ? मन आदि करण का प्रेरक कौन है ? इसके उत्तर में आचार्य ने कहा कि-जो श्रोत्र का भी श्रोत्र है, ऐसा उत्तर दिया, परन्तु इस उत्तर से शिष्य को सन्तोष नहीं हुआ क्योंकि स्पष्टरूप से उत्तर नहीं हुआ। अतः शिष्य पुनः पूछता है कि सुस्पष्ट रूपसे प्रवर्तक उस आत्मा के स्वरूप का उपदेश दीजिये। इसप्रकार शिष्य की आकांक्षा के उत्तर में कहते हैं-'न तत्र चक्षुरित्यादि' मन प्रभृतिक करणों के प्रेरक जो परमपुरुष उसमें चक्षु का गमन नहीं होता है अर्थात् चक्षुरादिक करण स्वकीय स्वकीय व्यापार को नहीं कर सकते हैं क्योंकि **'अशब्दमस्पर्शमरूपमव्य**

यम्' इत्यादि श्रुतियों से परमात्मा में रूपादिकगुणों का निषेध किया गया है और चक्षुरादिक करण रूपादिक गुण की सहायता से ही प्रत्यक्ष करने में समर्थ होते हैं। यहां चक्षु पद प्रत्यक्ष प्रमाण मात्र का उपलक्षक है। अतः परमात्मा का ग्राहक प्रमाण नहीं होता है। भगवान् परमेश्वर अतीन्द्रिय हैं इसलिये प्रत्यक्षप्रमाण के विषय नहीं होते हैं। परमात्मा के ग्रहण करने में वाणी भी समर्थ नहीं है-**'न वाग्गच्छति'** यहां वाक् पद से वागिन्द्रिय से उच्चार्यमाण शब्द प्रमाण उपलक्षित होता है। एतादृश शब्द प्रमाण भी सर्वेश्वर परमपुरुष श्रीराम जी को समझाने में समर्थ नहीं हैं, क्योंकि प्रत्यक्षोपजीवी जो शब्दप्रमाण है उसे अतीन्द्रिय वस्तु में प्राप्ति असम्भवित है। **'नो मनः'** यहां **मनः** पद से मन का व्यापार है प्रधान जिसमें एतादृश अनुमान प्रमाण लक्षित होता है। यह अनुमान भी प्रत्यक्षोपजीवी है। अतः प्रत्यक्षातीत वस्तु में अनुमान को भी अवसर प्राप्त नहीं होता है। वह मन परमात्मा में नहीं जाता है अर्थात् मनोगम्य परमात्मा नहीं हैं-**'यतो वाचोनिवर्तन्तेऽप्राप्य मनसा सह'** ऐसा श्रुति कहती है। अतः मनोगम्यत्व परमेश्वर में नहीं है।

इतना कहने पर भी सुस्पष्ट रूपसे तो परमेश्वर

उपदिश्यमान नहीं होते हैं इस जिज्ञासा में कहते हैं-**'न विद्यो न विजानीमो यथैतदनुशिष्यादिति'** ये परिदृश्य मान जो घट पटादिक पदार्थ हैं वे जैसे कम्बुग्रीवादिमान् होता है। घटादिक वस्तुओं में जिस तरह घटत्वादिक प्रकार रहता है जिसके बल पर घटादिक उपदिश्यमान होता है एतादृश कोई भी प्रकार को परमपुरुष में नहीं जानता हूँ। अतः घटादि की तरह किसी भी प्रकार से सुस्पष्ट रूपसे परमात्मा उपदेश के योग्य नहीं हैं क्योंकि वस्तु स्वभाव ऐसा है, इसमें उपदेशक का कोई दोष नहीं है, शिष्य ? ऐसा जान करके सन्तोष करो। हे गुरो ? घटादि के समान प्रकार के अभाव से भले ही सुस्पष्ट रूपसे परमेश्वर का उपदेश न हो सके परन्तु यह संसार तो विचित्र है तो इसमें कोई एतादृश पदार्थ हो उसे उदाहृत करके विशेष रूपसे भगवान् सर्वेश्वर श्रीराम के स्वरूप का उपदेश हमें दीजिये इस जिज्ञासा के उत्तर में कहते हैं-**'न विजानीमः'** इति। जो लौकिक वस्तु है उसमें लौकिक ही प्रकार विशेषण भी होता है उन लौकिक निष्ठ प्रकारों में से एक भी कोई प्रकार परमात्मा में नहीं है जिसप्रकार अर्थात् विशेषण के द्वारा परमात्मा जाना जा सकता है। अतः विशेष रूपसे हमलोग नहीं जानते हैं। तब विशेष रूपसे परमात्मा का उपदेश किस

प्रकार से किया जा सकता है। अतः इतने से ही संतोष करना चाहिये।

यदि लौकिक वस्तु की तरह स्पष्ट रूप्से परमात्मा उपदेश करने के योग्य नहीं हैं तब उस परमात्मा का स्वरूप किस प्रकार का है इस जिज्ञासा के उत्तर में श्रुति कहती है-**'अन्यदेवतद्विदितादित्यादि'** परमात्मा का जो स्वरूप है वह विदित अर्थात् ज्ञान का विषयभूत जो पदार्थ तादृश पदार्थ स्वरूप से परमात्मा का स्वरूप अतिभिन्न है। विदित वस्तु कोटि में इस परमात्मा का अन्तर्भाव नहीं है। यदि परमात्मा ज्ञान का विषय नहीं है तब तो परमात्मा आकाश कुसुम के समान हो जायगा इस जिज्ञासा के उत्तर में श्रुति कहती है-**'अथोऽविदितादधि'** अविदित जो आकाश कुसुमादिक उससे भी भिन्न परमात्म स्वरूप है। यद्यपि सम्पूर्ण रूपसे परमात्मा अविदित रूप होने पर भी गमन कुसुम के समान सर्वथा अविदित नहीं है। किन्तु उपनिषत् प्रमाणगम्य है अतः गगन कुसुमायमान नहीं होता है। गगन कुसुम तो किसी प्रमाण का विषय नहीं है अतः वह असत् है।

इसप्रकार का वचन हमलोगों ने सुना है। किससे आपने सुना इस जिज्ञासा के उत्तर में श्रुति कहती है

'पूर्वेषामिति' पूर्व पूर्व आचार्यों से सुना है । यहां पञ्चमी विभक्ति के अर्थ में षष्ठी विभक्ति है । किससे आपने सुना ? उत्तर में कहते हैं-'ये न' इत्यादि । जो पूर्वाचार्य ने हमलोगों के लिये उस परमपुरुष के स्वरूप का उपदेश दिया, उनसे मैंने सुना । पूर्वकालिक आचार्य लोगों ने परमपुरुष के स्वरूप का आलोचन करके हम लोगों से कहा । जो कि परमपुरुष का स्वरूप सम्पूर्ण रूपसे उपदेश योग्य नहीं है । अथवा अविदित शब्द से अचिदंश का प्रतिपादन होता है तथा विदित शब्द से चिदंश का प्रतिपादन होता है । तो उन चिदचित् से भिन्न सर्वेश्वर अन्तर्यामी श्रीरामजी हैं । इसप्रकार व्याख्यान करना चाहिये ।।३।।

**मनः प्रभृतिप्रेरकं परंब्रह्म श्रुतिभिरपि साकल्येन समुपदेष्टुं न शक्यतेऽतः साकल्येन समुपदेशाय नाग्रहः सेवनीय इति भावेन गुरुरुपदिशति-**

**यद्वाचानभ्युदितं येन वागभ्युद्यते ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।।४।।**

जिस परेश श्रीरामजी का वेद वाणी से भी सम्पूर्ण रूपसे वर्णन नहीं हो पाया है पर जिनकी प्रेरणा से जीववर्ग वाणी का व्यवहार करता है तुम उसी सर्वप्रेरक श्रीरामजी को ही परब्रह्म जानो जो तुम या अन्य जन इस स्थावर या जंगम की उपासना करते हैं वह ब्रह्म नहीं है ।।४।।

**यत् मनः प्राणादिप्रवर्तकं परंब्रह्म वाचा अनादि निधनया वेदवाण्या अनभ्युदितं साकल्येन न प्रकाशितम् । कस्तत्र प्रसरः इतरवाण्या इतिभावः । येन च परब्रह्मणा प्रवर्तिता सत्येव वाक् अभ्युद्यते समुच्चार्यते पुरुषैरितिशेषः । तदेव ब्रह्म मनः प्रभृतिप्रेरकमिति त्वं ब्रह्मजिज्ञासुः शिष्यः विद्धि जानीहि । यदिदं दृश्यमानं जगत् चिदचित्स्वरूपम् उपासते कामाकुलितमनस जीवा इति शेषः । तदिदं दृश्यमानं चिदचित्स्वरूपं जगत् तु न ब्रह्म इति बुध्यस्वेतिभावः ॥४॥**

मन प्रभृतिक इन्द्रियों का प्रेरक जो परब्रह्म है उसका संपूर्ण रूपसे श्रुति भी उपदेश नहीं करती है अतः साकल्येन ब्रह्मोपदेश के लिये अत्याग्रह नहीं करना चाहिये । इसप्रकार सुहृद्भाव से गुरु शिष्य को कहते हैं–**'यद्वाचा'** इत्यादि से । जो मन प्रभृति के प्रेरक परब्रह्म श्रीरामजी हैं वे वाणी से अर्थात् अनादि निधन वेद वाणी से भी प्रकाशित करने के योग्य नहीं हैं । तब वेदेतर वाणी उस ब्रह्म को प्रकाशित किस तरह कर सकती है अर्थात् नहीं कर सकती है–**'येन वागित्यादि'** जिस परब्रह्म से प्रवर्तित होती हुई वाणी पुरुषों से उच्चार्यमाण होती है, वही मनः प्रभृति के प्रेरक ब्रह्म हैं । हे शिष्य ? तुम ऐसा जानो । जो यह दृश्यमान चिदचित् स्वरूप जगत् की कामाकुलित

जीव उपासना करते हैं वह यह परिदृश्यमान चिदचित्स्वरूप जगत् ब्रह्म नहीं है ऐसा तुम समझो ।।४।।

**यन्मनसा न मनुते येनाहुर्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।।५।।**

जिस परब्रह्म श्रीरामजी को मनसे सम्पूर्णतया नहीं जान पाते हैं पर जिस श्रीरघुनाथजी से प्रेरित मनसे मनुष्य जान पाता है ऐसा श्रीराम तत्त्व वेत्ता जन कहते हैं अतः तुम निश्चय रूपसे उसी श्रीरामजी को परब्रह्म के रूपमें जानो जो इस जड तथा चेतन स्वरूप जगत की उपासना करते हो वह ब्रह्म नहीं है ।।५।।

यत् मनः प्रभृतिप्रेरकं ब्रह्म मनसा मनोरूपेणेन्द्रियेण न मनुते कश्चिज्जीव इति शेषः । इदं ब्रह्म इत्त्थमिति साकल्येन मनोद्वाराऽपि कश्चित् न वेत्तुमर्हतीतिभावः । येन परमब्रह्मणा मनः अन्तःकरणरूपम् मनः प्रकाशितं भवति यद्वा येन ब्रह्मणा मनः प्रेरितं सत् मतं स्वव्यापारयुक्तं भवति इति आहुः प्राचीना आचार्या इतिशेषः । तदेव मनः प्रभृतिप्रेरकं ब्रह्मेति त्वं विद्धि । नेदमित्यादीनां पूर्ववदेवार्थः ।।५।।

मन प्रभृति का प्रेरक जो ब्रह्म है उसे मन इन्द्रिय से कोई भी जीव मनन नहीं कर सकता है अर्थात् यह ब्रह्म इसप्रकार से साकल्येन मनो द्वारा भी उस ब्रह्म को कोई नहीं जान सकता है । और जिस ब्रह्म से अन्तःकरण रूप

जो मन इन्द्रिय है वह प्रकाशित होता है। यद्वा जिस ब्रह्म से प्रेरित होता हुआ मन मत होता है। अर्थात् स्वव्यापार युक्त होता है। इस तरह प्राचीन आचार्य लोग कहते हैं। उसी मनः प्रभृति के प्रेरक ब्रह्म को जानो। नेदम् इत्यादि का अर्थ पूर्ववत् समझना चाहिये। अर्थात् इस परिदृश्यमान चिदचित्स्वरूप की जो उपासना करते हो वह ब्रह्म नहीं है ॥५॥

**यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥६॥**

जिन सर्वेश्वर श्रीरामजी को अपने सामान्य आँख से जीव नहीं दीख पाता है पर उन्हीं श्रीरघुनाथजी की प्रेरणा से जीववर्ग अपने आँखें विषयों को दीखती हैं तुम उन्हीं सर्वप्रेरक श्रीरामजी को निश्चित रूपसे परब्रह्म श्रीरामजी को अवगत कर लो जो परिदृश्यमान चल एवं अचल की उपासना जीववर्ग करते हैं वह परब्रह्म सर्वशरण्य श्रीरामजी नहीं हैं ॥६॥

यत् परब्रह्मस्वरूपं चक्षुषा चक्षुरिन्द्रियेण न पश्यति न जानाति कश्चित् जीव इति शेषः। येन सर्वेश्वरेण प्रेरितानि चक्षूंषि चक्षुरिन्द्रियाणि पश्यति, छान्दसत्वात् वचनव्यत्यासः पश्यन्ति स्वविषयप्रकाशकानि भवन्ति, इत्यर्थः, यद्वा पश्यन्ति दृश्यन्ते इत्यर्थः, परमात्मना दृश्यन्ते चक्षूंषि अतीन्द्रियत्वं तु तेषामस्मदाद्यपेक्षया न

परमात्मापेक्षयेति भावः । अत्र पक्षे पश्यतीत्यत्र वचनव्यत्यासः कर्मार्थे कर्तृप्रत्ययश्च छान्दसत्वादेवा वगन्तव्यः । तदेवेत्यादेरुत्तरार्धस्य पूर्ववदेवार्थोऽनुसन्धातव्यः ॥६॥

जिस परब्रह्म स्वरूप को चक्षु से चक्षुरिन्द्रिय नहीं जान सकता है कोई भी पुरुष । और जिस परब्रह्म श्री रामजी से प्रेरित होकर चक्षुरिन्द्रिय विषय को जानता है। अर्थात् स्वकीय रूपादिक विषय को प्रकाशित करता है । यहां पश्यति में वचन व्यतय को समझना चाहिये । अर्थात् एक वचन स्थान में बहुवचन का प्रयोग करना चाहिये । यद्वा पश्यन्ति दृश्यन्ते परमात्मा के द्वारा चक्षुरिन्द्रिय देखा जाता है । इन्द्रिय में जो अतीन्द्रियत्व है वह अस्मदादि की अपेक्षा से है नतु परमात्मा की अपेक्षया है । इस पक्ष में पश्यन्ति में वचन व्यत्यास तथा कर्म अर्थ में कर्तृ प्रत्यय को छान्दस होने से हुआ है ऐसा समझना चाहिये-'**तदेव ब्रह्म**' इत्यादि । उत्तरार्ध का अर्थ पूर्ववत् पांचवें मन्त्र के समान जानें ॥६॥

**यच्छ्रोत्रेण न श्रृणोति येन श्रोत्रमिदं श्रुतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥७॥**

जो साधक परब्रह्म श्रीरामजी को प्राकृत अपने कान से नहीं सुन

सकता है परन्तु उन श्रीरामजी से प्रेरित होकर यह कान श्रीराम विषयक शब्दों को सुनता है तुम निश्चयपूर्वक उसी श्रीरामजी को परब्रह्म जानो किन्तु जो यह चर तथा अचर जगत की उपासना करते हैं वह परब्रह्म शरणागतवत्सल श्रीरामजी नहीं हैं ॥७॥

**यत् सर्वेश्वरस्वरूपं श्रोत्रेण इन्द्रियेण न श्रृणोति कश्चित् श्रावणप्रत्यक्षविषयं न कुरुते तत्स्वरूपस्य श्रोत्रेन्द्रियाऽविषयत्वात् । येन परब्रह्मणाप्रेरितं सत् श्रोत्रमिन्द्रियं श्रुतं श्रावणप्रत्यक्षविषयीकृतम् भवति । यद्वा श्रुतं स्वविषयकप्रत्यक्षजननरूपस्वव्यापारसमर्थं भवति इत्यर्थः । उत्तरार्धन्तु प्राग्वदेव व्याख्येयम् ॥७॥**

जो सर्वेश्वर परमात्मा श्रीरामजी का स्वरूप श्रोत्रेन्द्रिय से नहीं सुना जाता है अर्थात् श्रावण प्रत्यक्ष का विषय नहीं करता है क्योंकि परब्रह्म परमात्मा का स्वरूप श्रोत्रेन्द्रिय का विषय नहीं है । और जिस परमात्मा से प्रेरित होता हुआ श्रोत्रेन्द्रिय श्रुत श्रावण प्रत्यक्ष का विषय होता है । अथवा श्रुत होता है अर्थात् स्वविषयक प्रत्यक्ष जनन स्वरूप स्वव्यापार में समर्थ होता है । उत्तरार्ध की व्याख्या पूर्ववत् है ॥७॥

**यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८॥**

८ 卐 इति केनोपनिषदि प्रथमः खण्डः ॥१॥ 卐

जिन परमेश्वर श्रीरामजी को कोई भी साधक जीववर्ग अपने प्राण से प्राणयुक्त नहीं कर पाता है परन्तु जिन श्रीरघुनाथजी से प्रेरणा पाकर यह प्राण अपने विषयों में अग्रसरित हो जाता है तुम उसी को निश्चय रूपसे परब्रह्म श्रीरामजी हैं, ऐसा जानों जो परिदृश्यमान इस जगत की सामान्य ज्ञान वाले जन उपासना करते हैं वह परब्रह्म श्रीरामजी नहीं हैं ॥८॥

**यत् मनः प्राणादिप्रेरकपरमात्मतत्वं प्राणेन प्राणाख्येन करणेन न प्राणिति न चेष्टते जीवनापरपर्यायप्राणनव्यापारवत् न भवतीति यावत् । येन पर ब्रह्मणा प्राणः शरीरधारणकर्तृतया प्रसिद्धः प्राणः प्रणीयते प्रेर्यते यत्प्रेरितः सन् शरीरधारणात्मस्वव्यापार वान् भवतीत्यर्थः । तदेव ब्रह्मेत्यादेः प्राग्वदर्थः ॥८॥**

卐 इति केनोपनिषदि आनन्दभाष्ये प्रथमः खण्डः ॥१॥ 卐

जो मन प्राण प्रभृति के प्रेरक आत्म तत्व प्राण से प्राण नामक करण से चेष्टा नहीं करता है अर्थात् जीवनापरपर्याय प्राणन व्यापारवान् नहीं होता है । और जिस परब्रह्म श्रीरामजी से प्रेरित हो करके प्राण शरीरधारण कर्तृता रूपसे प्रसिद्ध प्राण प्रेरित होता है अर्थात् जिस परमात्मा से प्रेरित हो करके शरीरधारण लक्षण स्वव्यापारवान् होता है । 'तदेव ब्रह्म' इत्यादि का अर्थ पूर्ववत् समझना चाहिये ॥८॥

## 卐 अथकेनोपनिषदो द्वितीयः खण्डः 卐

यत् साकल्येन सर्वेश्वरस्य ज्ञानागोचरत्वं 'नेदं यदिदमुपासते' इत्यादिवाक्यप्रतिपादितम् तदेव दृढीकर्तुं गुरुरुपदिशति-

**यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेष्वथ नु मीमांस्यमेव ते मन्ये विदितम् ॥१॥**

यदि तुम ऐसा अनुभव करते हो कि सर्वेश्वर श्रीरामजी के तात्विक स्वरूप को मैं जान गया हूँ तब निश्चित ही परब्रह्म के दिव्य स्वरूप का थोडा ही भाग को जानते हो अतः उस परब्रह्म श्रीरामजी का तुम अंश हो तथा उसी श्रीरामजी का ही स्वरूप देववर्ग में है वह अवश्य ही विचार का विषय है अतः निश्चय रूपसे मानता हूँ कि तुमने परब्रह्म के स्वरूप को जाना है ॥१॥

हे शिष्य ? सुवेद सम्यग्जानामि ब्रह्मणो रूपमहमिति शेषः इति यदि मन्यसे अभिमानं कुरुषे तदा त्वं नूनं निश्चितम्, दहरमेव अल्पमेव ब्रह्मणो रूपं वेत्थ जानासि, ब्रह्मणः स्वरूपस्य अनन्तत्वेन सम्यग् ज्ञानानर्हत्वात् । त्वम् इत्यत्र सप्तम्यर्थे प्रथमा छान्दसत्वात्, अतः त्वयि शिष्ये यत् ब्रह्मणो रूपम् अन्तर्यमनकर्तृ । अथशब्दः अप्यर्थकः देवेष्वथ देवेष्वपि अस्य ब्रह्मणः यद् रूपम् ते त्वया विदितम् ज्ञातम् तत्तु मीमांस्यमेव

नु विचारणीयमेव साम्प्रतम् अनन्तस्वरूपस्य ब्रह्मणः इदानीमपि त्वया कात्स्न्र्येन, अज्ञातत्वात् कात्स्न्र्येन ज्ञानानर्हस्वभावं हि परंब्रह्म । अतः यद् ज्ञातं तदल्पमेव ज्ञातं मीमांसनीयता तिष्ठत्येव ब्रह्मणि त्वयापीतिभावः१

सर्वेश्वर परमपुरुष श्रीरामजी को सम्पूर्ण रूपसे ज्ञान का अविषयत्व **'नेदं यदिदमुपासते'** इत्यादि वाक्य से प्रतिपादित जो है उसी वस्तु को स्पष्ट करने के लिये गुरु उपदेश करते हैं-**'यदि मन्यसे'** इत्यादि से। हे शिष्य ? मैं ब्रह्म के स्वरूप को बराबर जानता हूँ, ऐसा यदि तुमको अभिमान होता हो तो निश्चित रूपसे तुम ब्रह्म के दहर-अत्यल्प रूप को जानते हो क्योंकि ब्रह्म परमात्मा श्रीरामजी का जो स्वरूप है वह अनन्त है इसलिये सम्यग् ज्ञान के योग्य नहीं है। **'त्वम्'** यहां सप्तमी के अर्थ में प्रथमा विभक्ति छान्दस होने से है। अतः तुम शिष्य में जो ब्रह्म का रूप आन्तर अकर्ता लक्षण इसको तो यथा कथञ्चित् जाना भी हो किन्तु देवताओं में जो ब्रह्म का रूप है, क्या उसे तुमने जाना ? वह रूप तो तुम से अभी भी विचारणीय ही है। क्योंकि अनन्त रूप ब्रह्म को अभी भी सम्पूर्ण रूपसे नहीं जाना है। ब्रह्म तो सम्पूर्ण रूपसे ज्ञान के अयोग्य है। इसलिये जो जाना वह तो अल्प ही ज्ञात हुआ। अतः मीमांस्यता तो ब्रह्म में अभी भी है ही१

ननु ममाज्ञस्य शिष्यस्य साकल्येन ब्रह्मस्वरूपज्ञानाभावेऽपि गुरुवर्यस्य भवतस्तु सम्यग् ज्ञानित्वं स्यादेव सम्यग् ज्ञानित्वेन विश्रुतो हि भवान् इत्याकांक्षा- यामाह गुरुः-

**नाहं मन्ये सुवेदेति नो न वेदेतिं वेद च ।**
**यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥२॥**

साधन होने पर भी मैं परमेश्वर श्रीरामजी को जानता हूँ ऐसा नहीं मानता हूँ एवं ऐसा भी नहीं मानता हूँ कि भगवान् श्रीरामजी को नहीं जानता हूँ हम सभी साधकवर्ग में जो कोई उस परमेश्वर को जानते हैं वे उस परब्रह्म के स्थिति को जानते नहीं एवं जो ब्रह्म को नहीं जानता हूँ ऐसा कहता है वही भगवान् श्रीरामजी को जानता है २

सुवेद सम्यग् जानाति ब्रह्मस्वरूपमयमाचार्य इति लोकाः वदन्ति अतोहं तथा विश्रुतः अहमाचार्यस्तु सुवेदेति सम्यग् जानामीति न मन्ये सम्यग् ज्ञानित्वाभिमानं न करोमि । तर्हि भवानपि सर्वथा न वेत्ति किम् इत्यत्राह नो न वेदेति न वेद न जानामि इति न किन्तु वेद जानाम्येव, अनन्तत्वात् साकल्येन न जानामि तथापि गुरूपदिष्टरूपेण तु जानाम्येवेतिभावः । न यः तद्वेद स नो तद्वेदेति योजना । इति, वदति च पदद्वयमध्याहार्य योजनीयम् । तथा च नः ब्रह्मज्ञानित्वेन विश्रुतानामस्माकं मध्ये यः कोऽपि आचार्यः तत् ब्रह्म

स्वरूपं वेद कात्स्न्र्येनाहं जानामि इति वदति सः तादृग् ज्ञानाभिमानी नैव तद्ब्रह्मस्वरूपं वेद जानातीत्यर्थः । ब्रह्मस्वरूपस्य साकल्येन ज्ञानाभिमानी अस्मादृशविश्रुतोऽपि नैव सम्यग् जानामीतिभावः । यश्च न वेदेति वदति स वेद इति योजना । तथा च-यः न वेद ब्रह्मस्वरूपं साकल्येन न जानाम्यहमिति वदति स वेद जानाति सम्यक् । ब्रह्मस्वरूपस्य साकल्येन ज्ञेयस्वभावतया ग्रहसाकल्येन न जानामीति ज्ञानवानेव सम्यग् ज्ञानवान् ब्रह्मणः अपरिच्छिन्नत्वस्य तेन ज्ञातत्वात् । अहं सम्यग् जानामीति ज्ञानवांस्तु परिच्छिन्नत्वमेव ब्रह्मणो ज्ञातवानतः स न सम्यग् ज्ञानीतिभावः । इयमेव ब्रह्मणः गुणानामविज्ञाने यः साकल्येन ब्रह्मगुणान् जानामीति मन्यते स न सम्यग् ज्ञानी तद्गुणानामनन्तत्वेन साकल्येन ज्ञातुमनर्हत्वात् । ब्रह्मगुणान् साकल्येन न जानामीति मन्यते स एव तद्गुणविज्ञानी अपरिच्छिन्नत्वेन तत् तद्गुणज्ञानात् इति बोध्यम् ॥२॥

हे गुरो ? मैं शिष्य तो अल्पज्ञ हूँ, अतः मुझे सम्पूर्ण रूपसे ब्रह्म ज्ञान का अभाव होने पर भी गुरु महाराज आपको तो सम्यग् ज्ञानित्व होना चाहिये क्योंकि आप तो ब्रह्मज्ञानी रूपसे लोक में प्रसिद्ध हैं । एतादृश

जिज्ञासा के उत्तर में कहते हैं-गुरु महाराज-'नाहं मन्ये सुवेदेतीत्यादि' आचार्य महाराज समीचीन रूपसे ब्रह्म स्वरूप को जानते हैं ऐसा लोग बोलते हैं। इसलिये लोक में विश्रुत है कि आचार्य समीचीन रूपसे ब्रह्मस्वरूप को जानते हैं। मैं तो ऐसा नहीं मानता हूँ, कि ब्रह्म स्वरूप को मैं बराबर जानता हूँ, अर्थात् ज्ञानित्व का अभिमान मैं नहीं रखता हूँ, तब क्या आप भी उस सर्वेश्वर परमात्मा श्रीरामजी को नहीं जानते हैं। एतादृश शिष्य जिज्ञासा के उत्तर में कहते हैं-'नो न वेदेति' नहीं जानता हूँ, ऐसा नहीं किन्तु जानता हूँ। परमात्मा अनन्त गुणवान् हैं तो अनन्त गुणाधिकरणता रूप साकल्य से तो नहीं जानता हूँ, किन्तु गुरु के उपदेश प्रकार से तो जानता हूँ यह भाव है। हमलोगों के बीच में जो कहता है जो मैं जानता हूँ, वह बराबर नहीं जानता है, इसप्रकार-'यो नः तद्वेद स नो तद्वेद' यहां योजना करनी चाहिये और इति पद तथा वेद पद द्वय का अध्याहार करना चाहिये। तब यह अर्थ होता है कि-ब्रह्मज्ञानी रूपसे लोक में विश्रुत हमलोगों के बीच से जो कोई आचार्य कहते हैं जो साकल्येन ब्रह्मस्वरूप को जानता हूँ, नो नैव वह स्वरूप को नहीं जानता है। अर्थात् ब्रह्मस्वरूप के साकल्येन ज्ञाता भी मेरे सदृश

लोक विश्रुत भी व्यक्ति साकल्येन ब्रह्म रूप को नहीं जानता है। **'यश्च न वेदेति वदति स वेद'** जो नहीं मैं जानता हूँ, ऐसा बोलता है वह बराबर जानता है, इसप्रकार वाक्य की योजना होती है। तब ऐसा अर्थ होता है कि जो कहे कि मैं ब्रह्मस्वरूप को साकल्येन नहीं जानता हूँ, वह समीचीन रूपसे ब्रह्म को जानता है क्योंकि ब्रह्मस्वरूप साकल्येन अज्ञेय स्वभावक होने से मैं साकल्येन नहीं जानता हूँ, एतादृश ज्ञानवान् ही सम्यग् ज्ञानवान् है क्योंकि उसने ब्रह्म की अपरिच्छिन्नता को जान लिया और मैं समीचीन रूपसे ब्रह्म को जानता हूँ, एतादृश ज्ञानवान् जो है वह तो ब्रह्म के परिच्छिन्नत्व को ही जानता है। इसलिये वह सम्यग् ज्ञानी नहीं है। यही तो ब्रह्म विज्ञान में गुण है कि जो साकल्येन ब्रह्म गुण को मैं जानता हूँ, ऐसा मानता है वह समीचीन रूपसे नहीं जानता है क्योंकि ब्रह्म का गुण अनन्त होने से साकल्येन जानने के अयोग्य है। और जो मानता है कि मैं ब्रह्मगुण को साकल्येन नहीं जानता हूँ, ऐसा बोलता है वह वास्तविक ब्रह्मगुणों का विज्ञाता है क्योंकि उसने अपरिच्छिन्नत्व रूपसे ब्रह्मगुण को जाना। अपरिच्छिन्न में अपरिच्छिन्नत्व प्रकारक ज्ञान प्रमा है। और अपरिच्छिन्न में परिच्छिन्नत्व प्रकारक ज्ञान भ्रमरूप है।

सर्वेश्वर श्रीरामजी के अनन्तानन्त गुण समूह हैं उन्हें सामान्य रूपसे जानना असम्भव है इस विषय को श्रीरामहिम्नकार श्रीविजयरामाचार्यजी ने-

**कदाचिद्धौयान् वै गणपति कणान् कोऽपि मतिमान्**
**तथा पारावारोदकलवचयान् श्रीरघुपते ? ।**
**क्वचिन्नक्षत्रौघं वियति गणनायां नयति वै**
**गुणानां ते पारं गमयितुमलं नैव कुशलाः ॥**

हे अनन्त जीवों के नाथ श्रीरामजी ? कोई विशिष्ट बुद्धिवाला व्यक्ति भूमिकणों को कथञ्चित् गणना करले या समुद्र कणों को भी गिन डाले अथवा आकाश में स्थित अनन्त नक्षत्र समूहों को भी गिन ले परन्तु आपके अनन्तानन्त दिव्यगुण समूहों को गिनकर अन्त नहीं पा सकता है तो मेरे जैसा सामान्य बुद्धिवाला जन दिव्य अनन्त महिमा का वर्णन कैसे कर सकता है । इसप्रकार प्रस्तुत किया है अतः सर्वेश्वर श्रीरामजी की अहैतुकी कृपा के विना परब्रह्म श्रीरामतत्त्व नहीं जाना जा सकता है कृपा प्राप्ति हेतु श्रीरामशरणागति मात्र ही कारण है अन्य नहीं तदर्थ जीवों को प्रयत्न कर सायुज्य मुक्ति प्राप्त करलेना चाहिये जो चरम लक्ष्य है यह प्रकृत मन्त्र का हार्दभाव है ॥२॥

**एवं द्वितीयमन्त्रस्योत्तरार्धेन यो नस्तद्वेदेत्यादिना**

ब्रह्मस्वरूपस्य साकल्येन श्रवणरूपज्ञानागोचरत्वमुपपादितम् । संप्रति मनननिदिध्यासनगोचरत्वमपि साकल्येन तस्य नास्तीति वदति-

**यस्यामतं तस्य मतं मतं यस्य न वेद सः ।**
**अविज्ञातं विजानतां विज्ञातमविजानताम् ॥३॥**

जिस साधक का ब्रह्म को मैंने जानलिया है ऐसा विचार नहीं उससे ब्रह्मतत्त्व जानलिया गया है एवं जिस साधक का यह विचार हो कि मैंने श्रीरामतत्त्व को जानलिया है तो उसने श्रीरामतत्त्व को नहीं जाना है क्योंकि वह ब्रह्मतत्त्व मैंने ब्रह्म को जान लिया है ऐसे अभिमान वाले के लिये वह श्रीरामतत्त्व अविज्ञात ही है एवं जिसे हमसे श्रीरामजी का स्वरूप अविज्ञात-जाना नहीं गया है ऐसा खयाल है उससे परब्रह्म तत्त्व जाना गया है ॥३॥

यस्य जनस्य ब्रह्म मया अमतम् साकल्येन न मननविषयीकृतम् इति बुद्धिरस्ति तस्य ज्ञानिनः कृते ब्रह्म मतम् मननविषयीकृतमेव विचारितमेवेति यावत् ब्रह्मणोऽनन्तत्वस्य तेनावधारणात् । यस्य तु ब्रह्म मया मतम् साकल्येन मननगोचरीकृतम् विचारितमिति यावत् इतिबुद्धिरस्ति स जनः न वेद न ब्रह्मविषयकमननवान् ब्रह्मणोऽपरिच्छिन्नत्वस्य तेनाज्ञातत्वात् तथा विजानतां ब्रह्म मया सम्यक् निदिध्यस्तम् साक्षात्कृतमिति यावत् इति विशेषेण ज्ञानाभिमानिनाम् कृते अविज्ञातम् ब्रह्म न सम्यक् साक्षात्कृतमित्यर्थः । ब्रह्म

णोऽपरिच्छिन्नत्वेन सम्यक् साक्षात्कारानर्हत्वात् । अविजानताम् ब्रह्म मया न सम्यक् साक्षात्कृतम् इत्येवं ज्ञानवतां कृते तु ब्रह्म विज्ञातमेव सम्यक् साक्षात्कृत मेव ब्रह्मणोऽपरिच्छिन्नत्वस्य तैः परिज्ञातत्वात् एवं ब्रह्मगुणानामपि साकल्येन मननिदिध्यासनागोचरत्व-माकलनीयम् तेषामप्यनन्तत्वात् ॥३॥

द्वितीय मन्त्र के उत्तरार्ध से 'योनस्तद्वेद' इत्यादि वाक्य जात से ब्रह्मस्वरूप के साकल्येन श्रवणरूप ज्ञान के अविषयत्व का उपपादन किया गया । संप्रति मनन निदिध्यासन विषयता भी साकल्येन ब्रह्म स्वरूप को नहीं है इस बात को बतलाने के लिये कहते हैं-'यस्यामतम्' इत्यादि । जिस पुरुष को ब्रह्म हमसे अमत है अर्थात् समस्त रूपसे मनन का विषय नहीं हुआ एतादृश बुद्धि है उस पुरुष को ब्रह्ममत हुआ मनन का विषय हुआ अर्थात् उस पुरुष से बराबर ब्रह्म विचारित हुआ । क्योंकि उसने ब्रह्म की अपरिच्छिन्नता का अवधारण-निश्चय कर लिया । और जिस पुरुष को ब्रह्म हमसे मत हुआ साकल्येन मनन का विषय हुआ अर्थात् हमसे विचारित हुआ एतादृश बुद्धि है उस पुरुष ने ब्रह्म को नहीं जाना अर्थात् ब्रह्म विषयक मननवान् नहीं हुआ क्योंकि उसने ब्रह्म की अपरिच्छिन्नता को नहीं जाना-

**'अविज्ञातं विजानतामिति'** ब्रह्म का मैंने समीचीन रूप से निदिध्यासन किया अर्थात् बराबर विचार किया। एतादृश विशेष रूपसे ज्ञान के अभिमानवान् है उसके लिये ब्रह्म अविज्ञात है अर्थात् तादृश व्यक्ति को वास्तविक रूपसे ब्रह्म का साक्षात्कार नहीं हुआ। क्योंकि ब्रह्म तो अपरिच्छिन्न होने से समीचीन रूपसे साक्षात्कार का विषय नहीं है-**'अविजानतामिति'** ब्रह्म का साक्षात्कार मुझे बराबर नहीं हुआ एतादृश ज्ञानवान् पुरुष के लिये तो ब्रह्मज्ञात है अर्थात् उसने ब्रह्म का वास्तविक रूपसे साक्षात्कार किया। क्योंकि ब्रह्म की अपरिच्छिन्नता को उसने जान लिया। इसीप्रकार ब्रह्म का जो गुण समुदाय है उसका भी साकल्य रूपसे मनन निदिध्यासन अविषमता का विचार करना चाहिये। क्योंकि ब्रह्म का जो गुण है वह भी अनन्त है तो जो मैंने ब्रह्म गुणों को जान लिया है एतादृश ज्ञानवान् है वह भ्रान्त है और जो मैंने साकल्येन ब्रह्मगुण को नहीं जाना है एतादृश बुद्धिवाला पुरुष है वह अभ्रान्त है क्योंकि उसने ब्रह्मगुण की अनन्तता को जान लिया ॥३॥

**ननु ब्रह्मस्वरूपं यदि साकल्येन विदितं न स्यात् तदा मोक्ष एव न सिध्येत इतिशंकमानं शिष्यं प्रति वदति गुरुः-**

**प्रतिबोधविदितं मतममृतत्वं हि विन्दते ।**
**आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ४**

अपने अनुभूत प्रत्यक्ष ज्ञान के द्वारा अपनी योग्यता के अनुसार निश्चय रूपसे अनुभूत सभक्तिक ज्ञान से ही साधक सायुज्य मुक्ति को प्राप्त करता है धैर्य स्वरूप आत्मा से सन्तुलित मनरूपी बल को जानलेता है तथा श्रीरामजी की उपासना स्वरूप विद्या से परब्रह्म श्रीरामतत्त्व को प्राप्त करलेता है ॥४॥

अत्र मन्त्रे श्रुतमितिशब्दोध्याहार्यः मनननिदिध्यासनबोधकशब्दसामर्थ्यात् ततः येन पुंसा विधिवद भिगतगुरुमुखात् ब्रह्मश्रुतम् सत्यत्वज्ञानत्वानन्तत्वादिभिः ब्रह्मेतराऽसाधारणैः धर्मैः ब्रह्मविषयकश्रावण ज्ञानं कृतम् तदनन्तरं मतम् उपपत्तियोजनया गुरु सब्रह्मचारिसम्बादेन शंकादिव्यावृत्त्यै मननात्मकं ज्ञानविषयीकृतम् तदनन्तरं प्रतिबोधविदितम् प्रतिबोधः निदिध्यासनम् उपासना वा तेन विदितम् साक्षात्कृतं ब्रह्म स पुमान् हि निश्चयेन अमृतत्वं मोक्षं विन्दते प्राप्नोति । साकल्येनाज्ञानेऽपि श्रवणमनननिदिध्यासनेन ब्रह्मणः योग्यैकदेशसाक्षात्कारेऽपि मोक्षलाभोभवति, अतो हे शिष्य न त्वयोद्विग्नेन भाव्यमिति गुरोराशयः । आत्मना धृत्या वीर्यं मनोऽवधानरूपं विद्यानिष्पत्तिजनकं बलं विन्दते लभते तेन च निष्पन्नया विद्यया

उपासनारूपया भक्त्या अमृतं परमात्मस्वरूपं विन्दते पश्यति साक्षात्करोतीत्यर्थः । धृत्या मनः समाधाय विद्यानिष्पत्तिद्वारा ब्रह्मसाक्षात्कारो भवति । ततश्च मोक्षसिद्धिर्भवतीति क्रमोऽत्र शिष्यमनः समाधानाय प्रदर्शितः कृपालुनाचार्येण । यद्वा बुध्यते इति बोधः वेद्यं वस्तु बोधे बोधे इति प्रतिबोधम्, प्रतिबोधं विदितमिति प्रतिबोधविदितम् । यद् यद् वेद्यं वस्तु तत्र तत्र अन्तर्यामितया वर्तमानं ब्रह्मास्तीति येन विदितं तेन ब्रह्म सम्यगवधारितम् स पुमान् अमृतत्वं विन्दते मोक्षं लभते इत्यर्थः कार्यः । अग्रिममन्त्रोत्तरार्धे नोपोद्वलितश्चायमर्थ इति बोध्यम् ॥४॥

यदि ब्रह्मस्वरूप साकल्य रूपसे विदित नहीं हुआ तब तो ब्रह्मज्ञान के अभाव होने से मोक्ष सिद्ध नहीं होगा ? एतादृश शंकाशील शिष्य के प्रति गुरु कहते हैं- '**प्रतिबोधविदितमित्यादि**' इस मन्त्र से '**श्रुतम्**' इत्याकारक शब्द का अध्याहार करना चाहिये । क्योंकि मनन निदिध्यासन बोधक शब्द के सामर्थ्य होने से । तब जिस पुरुष ने विधिवत् गुरु समीप में जा करके गुरु मुख से ब्रह्म का श्रवण किया । सत्यत्व ज्ञानत्व अनन्तत्वादिक अनन्य साधारण ब्रह्मधर्म द्वारा ब्रह्म विषयक श्रावण ज्ञान का संपादन किया । तदनन्तर '**मतम्**' उपपत्ति तर्क

योजनापूर्वक गुरु तथा सहाध्यायियों के द्वारा शंका निवृत्ति के लिये मननात्मक ज्ञान का विषय ब्रह्म को किया। उसके वाद **'प्रतिबोधविदितम्'** प्रतिबोध शब्द का अर्थ होता है-निदिध्यासन अथवा उपासना तादृशो पासना द्वारा ब्रह्म का साक्षात्कार किया। एतादृश पुरुष नियमतः अमृतत्व अर्थात् मोक्ष को प्राप्त करता है। यद्यपि साकल्येन ब्रह्म का ज्ञान नहीं हुआ तथापि श्रवण मनन निदिध्यासनों से ब्रह्म का योग्य एकदेश का साक्षात्कार होने पर भी मोक्ष की प्राप्ति होती है। अतः हे शिष्य ? तुम उद्विग्न हताश मत बनो ऐसा गुरु का आशय है। आत्मा से धैर्य से वीर्य प्राप्त होता है अर्थात् मन का अवधानरत विद्या निष्पत्तिजनक बल की प्राप्ति होती है। और उसके बाद विद्या के निष्पन्न हो जाने पर उपासना रूप भक्ति से अमृत अर्थात् परमात्मस्वरूप को देखता साक्षात्कार करता है। उसके बाद परमेश्वर साक्षात्कार के अनन्तर में मोक्ष की सिद्धि होती है। शिष्य के मन के समाधान करने के लिये कृपालु आचार्य ने क्रम को यहां बतलाया है। अथवा बुद्ध जो हो उसे बोध कहते हैं अर्थात् वेद्य वस्तु। प्रत्येक बोध में जो हो उसे कहते हैं प्रतिबोध। तादृश प्रतिबोध से विदित को प्रतिबोध विदित कहते हैं। जो जो वेद्यज्ञान

विषयं वस्तु है उन सब में अन्तर्यामी रूपसे वर्तमान ब्रह्म परमात्मा श्रीरामजी हैं इस बात को जिसने जाना उस पुरुष ने ब्रह्म को समीचीन रूपसे जाना, वह पुरुष अमृतपदवाच्य मोक्ष को प्राप्तकर सकता है ऐसा अर्थ करना चाहिये । अंतिम मन्त्र के उत्तरार्ध भाग से यह अर्थ पुष्ट होता है ॥४॥

**नन्वेवमुक्ता परमात्मस्वरूपसाक्षात्कारिणी विद्या कदा सम्पादनीयेत्यत्र गुरुराह-**

**इह चेदवेदीदथ सत्यमस्ति न चेदिहा वेदीन् महती विनष्टिः । भूतेषु भूतेषु विचिन्त्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥५॥**

卐 इति केनोपनिषदि द्वितीयः खण्डः 卐

साधक जीववर्ग ने यदि मनुष्य देह के रहते ही आन्तरिक रूपमें अन्तरात्मा श्रीरामजी को अवगत कर लिया तो अमृत रूप परब्रह्म श्रीरामजी की प्राप्ति सत्य है परन्तु इस देह के होते ही उस परतत्त्व श्रीरामजी को नहीं जाना तो महान् हानि है अतः धीर-विवेकी पुरुष सभी भूतवर्ग में अन्तरात्मतया स्थित श्रीरघुनाथजी का पूर्ण रूपसे संस्मरण करके इस मानव लोक से गमन कर अमृतत्व को प्राप्त कर जाते हैं अर्थात् श्रीरामसायुज्य प्राप्त करके जन्म-मृत्यु से रहित हो जाते हैं ॥५॥

**इह जन्मनि शास्त्राधिकारवति ब्राह्मणादिशरीरे सति यदि अवेदीत् ज्ञातवान् ब्रह्मेतिशेषः चेत् अथ**

तदा सत्यमविश्वरं ब्रह्म विद्याफलस्वरूपमस्ति वर्तते ब्रह्म प्राप्तिर्निश्चितेतिभावः । इह ब्राह्मणादिजन्मनि न अवेदीत् ब्रह्मज्ञानवान् नाभूच्चेत् तदा महती विनष्टिः महाननर्थः संसाराऽकूपारचंक्रमॅणस्वरूपः भवेत् । अतः ब्राह्मणादिशरीरे विद्याप्राप्तियोग्ये प्राप्ते सति सद्य एव ब्रह्मविज्ञानाय यतनीयम्, विलम्बो न कार्यमिति भावः । पूर्वमन्त्रोक्तप्रतिबोधशब्दार्थं दर्शयति । भूतेषु भूतेषु सर्वभूतेषु प्रतिबोधेत्यर्थः स्थितं ब्रह्म विचिन्त्य तेभ्यो विलक्षणत्वेनावधार्य आमरणं स्मारं स्मारं धीराः बुद्धिमन्तः बुद्धिस्तु अत्र वेदने ब्रह्मप्राप्ति अवदने महाननर्थः इति विवेकरूपा तेन ईदृशविवेकवन्तः जना अस्मात् लोकात् शरीरात् प्रेत्य शताधिकया मूर्धन्ययानाड्यानिर्गत्य अमृता मुक्ता भवन्ति देशविशेष विशिष्टं परमपुरुषं प्राप्ता भवन्तीति यावत् ॥५॥

卐 इति केनोपनिषदानन्दभाष्ये द्वितीयः खण्डः 卐

उपरोक्त क्रम से परमात्म स्वरूप साक्षात्कारिणी विद्या का कथन किया गया परन्तु एतादृश विद्या का संपादन कब करना चाहिये इस जिज्ञासा के उत्तर में गुरु कहते हैं-'इह चेदवेदीदित्यादि' से इस जन्म में शास्त्राधिकारी ब्राह्मणादिक शरीर की विद्यमानता में यदि ब्रह्म परमात्मा श्रीरामजी को जान लिया तब तो ठीक है

अर्थात् एतत् शरीरावच्छेदेन ब्रह्मज्ञान हो गया तब तो ब्रह्म प्राप्ति निश्चित ही है । यदि कदाचित् इस ब्राह्मणादि जन्म में ब्रह्मज्ञान को प्राप्त नहीं किया तो बहुत बडी क्षति हुई अर्थात् यदि ब्रह्मज्ञान नहीं हुआ तो संसार चक्ररूप जो महासागर है उसमें परिभ्रमणरूप महान् अनर्थ प्राप्त होगा। अतः विद्या प्राप्ति के योग्य ब्राह्मणादि शरीर की प्राप्ति होने पर ब्रह्मज्ञान के लिये अवश्यमेव प्रयत्न करना चाहिये । विलम्ब नहीं करना चाहिये ।

पूर्व मन्त्र में जो प्रतिबोध शब्द आया है उसके अर्थ को बतलाने के लिये कहते हैं-'भूतेषु' इत्यादि । भूत भूत में सर्वभूतों में (प्रतिबोध का अर्थ है ।) स्थित ब्रह्म को भूतादि भूतादि विलक्षण रूपसे निश्चय करके आमरण इस वस्तु का स्मरण करता हुआ धीर धीर बुद्धिमान् व्यक्ति । यहां बुद्धि शब्द का अर्थ है-कि ब्रह्म स्वरूप को जानने योग्य शरीर प्राप्त होने पर भी ब्रह्म प्राप्तिरूप अर्थ को नहीं जानने पर यह अनर्थ प्राप्ति होती है इत्यादि विवेक रूप ही है । इसलिये एतादृश विवेक वान् पुरुष इसलोक से इस शरीर से जाकरके अर्थात् शताधिक मूर्धन्य नाडी द्वारा निकल करके अमृत होते हैं मुक्त हो जाते हैं अर्थात् देशविशेष विशिष्ट में स्थित परम पुरुष सर्वेश्वर श्रीरामजी को प्राप्त हो जाते हैं ॥५॥

